# कूहा

## (खण्डकाव्यम्)

प्रणेता

उमाकान्त शुक्लः

१९८४

प्रकाशिका

देववाणी-परिषद्, दिल्ली

६, वाणी-विहारः, नयी दिल्ली-११००५९

(भारतम्)

परमादरणीयानां परमसहृदयानां
डा॰ सत्यव्रतशास्त्रिमहाभागानां
करकमलयोः ग्रन्थं समर्प्यते
सानन्दपूर्वकम्।

[signature]
(उमाकान्त शुक्लेन)
२८।६।१९८८

# कूहा

व्याप्तास्त्यकस्मादिह राष्ट्रपद्मषण्डे घना सम्प्रति यातिकूहा ।
झटित्यमुं कृन्ततु कोऽप्युदेष्यन् विवेकमार्तण्डकरप्रकर्षः ॥
(कूहा/११६)

# कूहा

## (संस्कृत-खण्डकाव्यम्)

(हिन्द्यांग्लभाषानुवादसहितम्)

प्रणेता

उमाकान्त शुक्लः

अनुवादकः

रमाकान्त शुक्लः

१९८४

प्रकाशिका

देववाणी-परिषद्, दिल्ली

६, वाणी-विहारः, नयी दिल्ली-११००५९

(भारतम्)

कूहा
(संस्कृतखण्डकाव्यम्)
प्रणेता © : उमाकान्त शुक्लः
प्रकाशिका : देववाणी-परिषद्, दिल्ली
आर ६, वाणी-विहारः, नयी दिल्ली-११००५९
मुद्रकः : प्रवीण प्रिंटिंग सर्विस
टी एक्टेंशन ३५, उत्तम नगर,
नयी दिल्ली-११००५९
संस्करणम् : प्रथमम् १९८४
मूल्यम् : विंशति रूप्यकाणि रु० २०.००

Kūhā (Mist)
Author : Shukla, Uma Kant
Publisher : Devavani Parishad, Delhi,
R-6 Vani Vihar, New Delhi-110059
Printers : Parveen Printing Service
T. Extn. 35, Uttam Nagar,
New Delhi-110059
Edition : First 1984
Price : Rupees Twenty only Rs. 20.00

# प्रास्ताविकम्

'देववाणी-परिषद्, दिल्ली'—इत्येतस्याः संस्थायाः सद्ग्रन्थ-प्रकाशन-योजनायाम् उत्तरप्रदेशे 'बुलन्दशहर' जनपदान्तर्गत-'खुरजा' नगरे आचार्य-श्रीब्रह्मानन्दशुक्लात् श्रीमत्यां प्रियम्वदादेव्यां १८-१-१९३९ई० तारिकायां लब्धजनुषा, परिषदो मान्यसदस्येन संस्कृत-हिन्दी-एम०ए०-साहित्याचार्य-सांख्ययोगाचार्य पीएच०डी०-प्रभृत्युपाधिविभूषितेन, मुजफ्फरनगरस्थ-सनातनधर्म कालेजे संस्कृत-प्राध्यापकेन तथा च 'मङ्गल्या'-'परीष्टिदर्शन'-'चाङ्गेरिका' प्रभृत्यनेकग्रन्थकर्त्रा श्रीमता उमाकान्त शुक्ल-महाभागेन विरचितं 'कूहा' इतीदं प्रबन्धकाव्यं प्रकाश्यते।

१९८४ तमेशवीयेऽब्दे विश्वस्य महती हानिरभवत् श्रीमत्या इन्दिरागान्धिमहाभागायास्तत्सुरक्षापुरुषाभ्यामेव कृतया जघन्यया हत्यया। ३१.१०.१९८४ ई० तारिकायामयं हि गुलिकाप्रहारो भारतस्य सामासिक-संस्कृतेर्वक्षसि जातः। न केवलं सम्पूर्णं भारतमपि तु समस्तमेव विश्वमनया हत्यया स्तब्धं, क्षुब्धं खिन्नं चाभूत्। अनेकासु भाषासु कविभिः स्वमनोभावा गद्य-पद्य-रूपेण प्रकटिताः प्रकाश्यन्ते च। संस्कृतेऽपि नैकैः रचनाकारैः श्रीमतीमिन्दिरागान्धिमहाभागामवलम्ब्य नैका रचनाः प्रस्तुताः प्रस्तूयन्ते च।

श्रीमत्या इन्दिरागान्धि-महाभागाया व्यक्तित्वस्येदमनितरसाधारणं वैशिष्ट्यमासीद् यत्सा स्वप्रशंसकानामालोचकानाञ्च कृते समान-रूपेणाकर्षणं धत्ते स्म। तस्या जीवनस्य प्रमुखा घटनाश्चित्रयद्भिः संस्कृत-रचनाकारैस्तस्या राष्ट्रसेवि दृढनिश्चयि रूपमेव प्रधानतो वर्णितम्। सा यदपि कार्यमकरोत्, तत्समानान्तरमेव कोऽपि न कोऽपि संस्कृतरचनाकार-स्तस्योल्लेखं स्वरचनायामकरोत्। इदमेकं तत् इन्दिराया आकर्षकव्यक्ति-त्वस्य अपरतश्च संस्कृत-रचनाकाराणां वर्तमानं प्रति जागरूकतायाः परिचायकमस्ति। तामवलम्ब्य तस्या प्रधानमन्त्रित्वकाले, पराजयकाले, पुनर्विजयकाले, स्वर्गप्रयाणकाले च रचिता नैका रचनाः संस्कृत-साहित्येऽव-लोकयितुं शक्यन्ते यासु तस्या गुणकीर्तनं कविभिः कृतम्। कतिपयासु कृतिषु तस्या आलोचनापि दृश्यते। यैरिन्दिराया जीवनकाले तस्यास्तिक्ता

आलोचनापि कदाचिदक्रियत तैरपि तत्स्वर्गप्रयाणानन्तरं तद्गुणा एवं मुक्तकण्ठं समुपश्लोक्यन्ते । स्वर्गता इन्दिरा विरोधिनामपि आदरणीया संवृत्ता । समस्तेनापि विश्वेन तस्या महायात्राप्रसङ्गे यथा तस्यै श्रद्धाञ्जलिर्दत्तः अद्यत्वेऽपि च यथा सा विश्वजनैः स्मर्यते तत्सर्वमपि दूरदर्शन-प्रेक्षकाणाम् आकाशवाणी-श्रोतॄणां, समाचारपत्र-पाठकानां च कृतेऽद्यापि प्रत्यक्षीभवति ।

'कूहा' इत्यस्मिन् काव्येऽपि तस्याः जीवनगाथा गुणाश्च प्रसक्त्यानु-प्रसक्त्या कविना वर्णिताः । अस्य काव्यस्य कथावस्तु इदमेवास्ति यद् हिमालयशृङ्गेषु स्वर्गतायाः श्रीमत्या इन्दिरागान्धि-महाभागाया अस्थिभस्म विकीर्य हिमालयात्प्रतिनिवर्तमानः काव्यस्यास्य नायकः श्रीराजीवगान्धी वायुयानस्थितः सन् स्वमातुः स्मरणं करोति । अस्मिन् प्रसङ्गे कविना तस्या जीवनचरितं संक्षेपतो वर्णितम् । तदनन्तरं श्रीराजीवगान्धी देशस्य कल्याणकामनां प्रकुर्वन् निजराजधानीं समायाति, आप्तबोधः सन् भारतमातुः सेवार्थं सर्वात्मना तत्परश्च भवति ।

कविनेयं रचना ११-११.१९८४ ई० तारिकायां, प्रारब्धा यस्मिन् दिने श्रीराजीवगान्धिना हिमालये इन्दिराया अस्थिभस्म विकीर्णम्, १९.११.१९८४ तारिकायां चेयं रचना सम्पूर्णा यदा पुण्यश्लोकाया इन्दिरायाः सप्तषष्टितमो जन्मदिवसः सर्वत्र सम्मान्यते स्म । तस्या हत्यामनु राष्ट्रे य आक्रोश - प्रभञ्जनः प्रावर्तत तस्य शमनमेतेषु दिवसेषु संजायते स्म । अस्मिन् काले यदपि अपेक्षितमासीत् तत् काव्यनायकस्य प्रधानमन्त्रिणः श्रीराजीवगान्धिनो मुखेन प्रकटीचकार कविः ।

कविर्यदा समकालीनं कमपि जनं स्वकाव्यस्य नायकत्वेन वृणोति तदा नूनं स तस्मिन् नायकोचितगुणानां संयोजनं करोति । यद्यपि लोके तस्य जनस्य अनेकानि विवादास्पदकार्याण्यपि भवन्ति सम्भवन्ति वा, तथापि कविः काव्ये तं तदा नायकत्वेन चित्रयति तदा स तस्य सर्वस्वीकार्याणा-मादर्शगुणकार्याणामेव प्राधान्येन चित्रणं करोति । कवेरस्य नीरक्षीर-विवेकेन बहवो गुणदोषयुता अपि जागतिका जनाः काव्ये परिष्कारं प्राप्य लोकोत्तरनायकाः भूत्वा चिरकालं यावत् विश्वजनैः स्मर्यन्ते ।

भारतस्य युवा प्रधानमन्त्री श्रीराजीवगान्धी अस्य काव्यस्य नायकः । विश्वस्य कस्या अपि भाषाया काव्ये नायकत्वेन सोऽस्मिन्नेव काव्ये सर्व-

प्रथमं वर्ण्यते। कविना तन्मुखेन योऽपि सन्देशो दापितस्तत्र नास्ति अतिरञ्जना। अयं हि सन्देशो भारतीयसंस्कृतेरुदाराणां गुणानां समवायः। हिंसादावानलदन्दह्यमानदेहस्य भारतस्य शासनसूत्रं समर्यादं सञ्चालयता मातृवियोगदग्धेनापि तेन यथा अल्पकालेनैव देशे शान्तेः स्थापना कृता क्रियते च, तत्र धीरोदात्तनायकोचितगुणानां दर्शनं भवत्येव। सुखदाश्चर्यावहमिदं यत्काव्यनायकस्य राजीवस्य मुखेन यदपि कविना प्रकाशितं तदधिकांशतः ऐतिहासिकपुरुषेण श्रीराजीवगान्धिना सद्य एव उदीरितमप्यस्ति। कवेर्नायको लोके कल्याणकामनापरकं स्वलक्ष्यं प्राप्नोत्विति परमेशः प्रार्थ्यते। तदैव नायकस्य नायकत्वं कवेश्च क्रान्तदर्शित्वमन्वर्थतां भजिष्येते। अयमस्ति काव्यनायकस्याभिलाषः—

**हिंसा विनश्येत्सुचिराय सर्वे स्वार्था अभद्रा प्रलयं प्रयान्तु।**
**चारित्र्यसम्पत्तिरुदेतु नित्यं माद्यन्तु सर्वेऽपि च सम्प्रदायाः।११५।**

**सुरक्षिता हृष्यतु राजनीतिः स्वस्थाः सदा संस्कृतयो लसन्तु।**
**अबाधिता दर्शनपद्धतिः स्याद्धर्मा उदाराश्च समे भवेयुः।।११६।।**

**तस्या वधान्मूढमिवाद्य राष्ट्रं जाने समुत्पिञ्जमिवाति जातम्।**
**तथापि शोके विदधातु धैर्यं समोऽपि लोकः प्रणयो ममैषः।११७।**

**जने जने सा प्रतिभा नवीना प्रकाशतामैक्यविधानकर्त्री।**
**याभिर्भवेच्छान्तिरिहानवद्या भवन्तु दिव्या रचनाः पुनस्ताः।११८।**

**व्याप्तास्त्यकस्मादिह राष्ट्रपद्मषण्डे घना सम्प्रति यातिकूहा।**
**झटित्यमुं कृन्ततु कोऽप्युदेष्यन् विवेकमार्तण्डकरप्रकर्षः।।११९।।**

काव्यमिदं परिदेवनस्य, अवसादस्य शोकस्य वा काव्यं नास्ति अपि तु शान्तेः, विवेकस्य, कर्मठतायाः, सौमनस्यस्य, रचनात्मकतायाश्च काव्यमस्ति। शोकदिवसेषु अस्य रचना नैव जाता, अतः शोकापनोदं सोत्साहतां च जनयति। अस्य प्रारम्भोऽधृष्यभावे निदर्शनं गतस्य, भारतस्य रक्षाकरण्डस्य, उद्रिक्तसत्त्वस्य विशालराशेश्च हिमालयस्य वर्णनेन भवति :—

**सौभाग्यसारो धरणीतलस्य जगत्प्रसूतेः कमनीयशिल्पम्।**
**उद्रिक्तसत्त्वस्य विशालराशिर्हिमालयोऽसौ जयति त्रिलोक्याम्।१।**

य औषधीभिर्मणिभिः प्रभावैः पूर्णः समन्ताद् दृढबद्धबन्धः ।
ध्रुवं समावर्जनमन्त्र आहो रक्षाकरण्डः खलु भारतस्य ॥६॥

काव्यमध्ये इन्दिरायाः कर्मसौन्दर्यं स्मर्यते । सा ३०.१०.१९८४ तारिकायाम् उत्कलेषु स्वदेशसेवार्थं सर्वमपि सोढुं सहर्षं भाषते—

यदि स्वदेशं खलु सेवमाना हता तदा स्यां विषयः स्मयस्य ।
जाने मदीयं प्रतिन्दिु रक्तं देशोन्नतेर्यास्यति कारणत्वम् ॥६८॥

काव्यान्ते च शोकं निगृहीतवता काव्यनायकेन श्रीराजीवगान्धिना देशसेवार्थं सत्कर्माराधनं काम्यते ।

नूनमियं काव्यकृतिः अनितरसाधारणी युगकृतिरस्ति । कविना काव्यरचनाकाले यद् दृष्टं, यच्चानुभूतं यच्च चिन्तितम् तस्य तथा कवित्वमयं वर्णनमुपन्यस्तं येन काव्यपाठकानां मनसि उदात्ततानुभूयते । अक्षरश इतिहाससम्मतमपि विषयवस्तु काव्यरसेनाद्यन्तं लोकोत्तरं चारुत्वं भजते ।

अस्य काव्यस्य रचनार्थं श्रीमन्त उमाकान्तशुक्लमहोदया भूयो भूयो वर्धाप्यन्ते ।

अस्य काव्यस्य प्रकाशनं हिन्द्यांग्लभाषानुवादाभ्यां सह क्रियते येन संस्कृतापरिचिता अपि अस्य भावतत्त्वेन परिचिता भवेयुः । आंग्लानुवाद-कर्मणि भारतसर्वंकारस्य योजनायोगे संयुक्तसचिवपदमलंकुर्वद्भिः कविवर्यैः श्री श्रीसुन्दरराजमहाभागैरस्मै जनाय समनोयोगं यन्निर्देशनं दत्तं तदर्थमयं जनस्तेषां कार्तज्ञं साभारमावहति । काव्यरसिका अस्य काव्यस्य आस्वादनार्थं समीक्षकाश्च समीक्षार्थं सादरमाहूयन्ते ।

विदुषां वशंवदः

(डॉ० रमाकान्त शुक्लः)
महासचिवः
देववाणी-परिषद्, दिल्ली

१३ १२.१९८४ ई०
देववाणी-परिषदो नवमः स्थापनादिवसः

आर ६, वाणी-विहारः
नयी दिल्ली-११००५९

॥ श्रीहरिः ॥

# कूहा[1]

सौभाग्यसारो[2] धरणीतलस्य
जगत्प्रसूतेः कमनीयशिल्पम् ।
उद्रिक्तसत्त्वस्य विशालराशि-
र्हिमालयोऽसौ जयति त्रिलोक्याम् ॥१॥

धातुः कलाया वरिमा[3]ऽनवद्यो
न्यासो वरेण्यः कुशलः प्रयोगः ।
क्षणे क्षणे नूतनतां दधानो
हिमालयोऽसौ जयतान्नगेशः ॥२॥

पृथ्वीतल का सौभाग्य-सार, ब्रह्मा का कमनीय शिल्प तथा प्रवृद्ध सत्त्व-गुण का विशाल स्तूप यह हिमालय त्रिलोकी में सबसे उत्कृष्ट है ॥१॥

विधाता की कला की मंजुल सुगढता, चारु विन्यास, कुशल प्रयोग तथा पल-पल नवीनता धारण करता यह हिमालय सदा सर्वोत्कृष्ट बना रहे ॥२॥

1. The Himalayas shine forth in the world, as the quintissence of all the wealth of Earth, an exquisite Piece of art created by God; and a vast store-house of lofty nobility (strength).

2. May the Himalayas, the king of mountains, a faultless expanse, a beautiful exhibition and astute application of skill of the creative art of God, continue to shine, assuming a new freshness every moment.

---

१. कूहेति प्रक्रान्तखण्डकाव्यस्य नामधेयम् । तद्धेतुस्तु ११९ संख्याके श्लोके कूहाशब्दप्रयोगः । कूहा — कुज्झटिका । विशेषस्तु तत्रैव द्रष्टव्यः । काव्येऽस्मिन्निन्द्रवज्रोपेन्द्रवज्रयोस्तदुपजातेश्च प्रयोगः । अन्तिमे तु श्लोके वसन्ततिलका वृत्तम् ।

२. आदौ पञ्चविंशतिश्लोकैर्हिमवन्तं कवते ॥१॥

३. वरिमा = विस्तारः । श्रेष्ठता वा । कलाया इति पदं वारिमा न्यासः

द्रुतं वहन्त्यो विशदप्रवाहा
नद्यो यदीयां करुणां गरन्ति ।
दम्भोलिकोटीरपि दम्भयन्त्यः[१]
शिला यदीयं द्रढिमानमाहुः ।।३।।

यत्रोद्गताः पुष्टिमिता[२]श्चलन्त्यो
रुद्धाः समुत्प्लुत्य पुनः प्रयान्त्यः ।
उत्तालतालैस्तरलैस्तरङ्गै-
र्गायन्तिनृत्यन्ति नदन्ति नद्यः ।।४।

निर्मल प्रवाहशीला द्रुत गति से बहती नदियाँ जिसकी कारुण्य-वृत्ति का कथन करती है तथा वज्र के किनारों को भी मोथरा बना देने वाली शिलाएँ जिसकी दृढता को बताती हैं ।।३।।

जहाँ उत्पन्न हुईं, पुष्ट हुईं, बहती हुईं, रोके जाने पर उचक कर फिर चल पड़तीं नदियाँ तरल-तरंगों की तालियों से गाती हैं, नाचती हैं और कल-कल ध्वनि करती रहती हैं ।।४।।

3. Its clear rapids speak volumes of its compassion, Its rocks which can blunt even the thunderbolt are its hardness and strength.

4. The rivers emanating from it and leaping over the obstacles on the way and swelling gradually, appear to be exclaiming, singing and dancing with their resplendant waves.

---

प्रयोगश्चेति सर्वत्र सम्बध्यते । क्षणे क्षण इत्यनेन प्रतिक्षणं परिणामिनो हि सर्वे भावा ऋते चितिशक्तेरिति दार्शनिकानामुताहो क्षणे क्षणे यन्न- वतामुपैति तदेव रूपं रमणीयताया इति रमणीयताशास्त्रनिष्णातानां मतमुबञ्चति ।।२।।

१, दम्भयन्त्यो दम्भु दम्भन इति धातोः ।।३।।

२.. पुष्टिमिताः==पुष्टि गताः ।।४।।

रिङ्गत्तरङ्गाच्छकटाक्षकम्रा
तटाद्र्युरोजाहितरम्यरूपा ।
नद्यन्तरैः सार्धमतीव हृष्टा
यदङ्गणे क्रीडति जह्नुकन्या ॥५॥

यः खेचराणां निजगौरवेण
दृष्टीः समाकृष्य धुनोति गर्वम् ।
भूमिस्थितानां पुनरुन्नमय्य
चेतोविकासं प्रकरोति नित्यम् ॥६॥

चंचल तरंग रूपी निर्मल कटाक्षों से सुन्दर, तटवर्ती पर्वत-उरोजों से मनोहर रूप धारण करती प्रसन्न जह्नु की कन्या (गंगा) जिसके आँगन में अन्य नदियों के साथ खेलती रहती हैं ॥५॥

जो सदा अपनी गुरुता से गगन-चारियों की दृष्टि को खींचकर उनके गर्व को दूर कर देता है तथा पृथ्वी पर स्थित प्राणियों की दृष्टि को ऊपर उठाकर उनके चित्त का विकास करता रहता है ।

5. In its lap, plays, the Ganga (the daughter of Jahnu), with her clear beutiful eyes of white waves and with her appearance of flowing from the breasts as it were of the hills on her banks gleefully along with other rivers.

6. It attracts the attention of those in the sky with its greatness and smashes their pride. Similarly, it lifts up the people standig on the ground down below there-by always elevating their thoughts.

यस्तूलिकाविभ्रमकारिकूटैः
सूचीमुखैः पूरितरागरेखैः ।
चित्राणि भावप्रवणानि नित्यं
नभःप्रपत्रे लिखतीव चित्रम् ।।७।।

सारे समग्रत्वविभावनायां
कलानिवेशे ललिते विधौ वा ।
सौभाग्यराशावभिगम्यताया-
मधृष्यभावे च निदर्शनं यः ।।८।।

जो नित्य नुकीले, राग-रेखाओं से पूरित तूलिका का भ्रम उत्पन्न करते शिखरों से आकाश-पत्रक पर मानों भाव भरे चित्रों की विचित्र रचना करता है ।।७।।

जो (हिमालय) सारवत्ता, समग्रता के उन्मेष, कला निवेश, लालित्य-विधान, सौभाग्यराशि, अभिगम्यता और अधृष्यता का एक ही निदर्शन है ।।८।।

7. It appears to be sketching significant drawings on the canvas of the sky with its pointed peaks looking like the tip of the painter's brush engaged in colourful drawings.

8. It is a model of strength, of totality of knowledge, of beauty, of art, of abundance in riches, of desirabilty and of unassailability.

य औषधीभिर्मणिभिः प्रभावैः
पूर्णः समन्ताद् दृढबद्धबन्धः ।
ध्रुवं समावर्जनमन्त्र आहो
रक्षाकरण्डः[1] खलु भारतस्य ॥९॥

हैयङ्गवीनाक्षतदुग्धमुक्ता-
शङ्खेन्दुकार्पासदधिश्रितानाम् ।
शौक्ल्यश्रियां यः प्रतिभाति हृद्या
दिव्यायतैका विशदा निषद्या[2] ॥१०॥

जो औषधियों, मणियों और प्रभावशीलता से परिपूर्ण तथा सब प्रकार से दृढ़ता से बँधा मानों आकर्षण-मन्त्र लगता है या फिर भारत का रक्षा-करण्ड (रक्षा का गण्डा, तावीज) प्रतीत होता है ॥९॥

जो मक्खन, अक्षत, दूध, मोती, शंख, चन्द्रमा, कपास और दही की धवलता की लक्ष्मी की मनोहर, दिव्य, आयत तथा विशद एक हाट सी प्रतीत होता है ॥१०॥

9. It is surely the secret mantra for luring all beings, full of herbs, gems, and greatness with its hard and compact hill ranges. Or perhaps it is the talisman for the protection of Bharat (India).

10. It is a clear pleasing and glowing collection of all the beauty and whiteness which one can see in butter, rice, milk, pearl, conch, moon, cotton and curd.

---

१. रक्षाकरण्ड.=रक्षाकरण्डकमित्यर्थः ॥९॥

२. निषद्या=आपणः । 'आपणस्तु निषद्याया'मित्यमरः ॥१०॥

येनैकधोरेण महोज्ज्वलेन
लसन्नदीजालकपत्रभङ्गैः ।
अलङ्कृता भारतभूरजस्त्रं
रोमाञ्चिता सस्यभरैरिवास्ते ॥११॥

यस्मै वरिष्ठाय सदा त्रिलोक्यां
सौन्दर्यलुब्धाः स्पृहयाम्बभूवुः ।
यन्मेखलां स्फीतसरांसि सर्वे
द्रोणीर्हिमानीः स्पृहयन्ति सन्तः ॥१२॥

जिस अकेले धीर और महोज्ज्वल (हिमालय) द्वारा शोभित, नदियों के जाल रूपी पत्र-रचनाओं से अलंकृत भारत-भूमि निरन्तर धान्य-समृद्धि से रोमांचित सी प्रतीत होती है ॥११॥

सौन्दर्य के लोभी जन तीनों लोकों में जिसकी सदा कामना करते रहे हैं तथा आज भी जिसकी ढलानों, विशाल सरोवरों, घाटियों और हिमानी की सभी भद्र-जन अत्यधिक इच्छा करते रहते हैं ॥१२॥

11. The land of Bharat looks as if it has goose flesh with crops, being dressed up with the criss-crossing system of rivers flowing from its lofty heights.

12. People seeking after beauty in the world have always been attracted to it. Similarly, great men have always liked the slopes, the lakes, the valleys and the snows thereof.

गृह्णन्ति यस्मात् कवयः कवित्वं
शिल्पानि यस्मान्ननु शिल्पकाराः ।
मन्त्राननन्तान् मुनयः प्रसादान्
सचेतसो दर्शनमात्तबोधाः ॥१३॥

यस्येन्द्रनीलद्रवनीलखेन
स्पृष्टा हिमानी रचयत्यजस्रम् ।
मिलिन्दमालामिव पुण्डरीके
तां कालिकां[1] वापि महेशकण्ठे ॥१४॥

जिससे कवि-जन कवित्व, शिल्पकार शिल्प, मुनि-जन अनन्त मन्त्र, सहृदय-जन प्रसाद तथा ज्ञानी-जन 'दर्शन' प्राप्त करते हैं ॥१३॥

इन्द्रनील मणि के द्रव जैसे नील आकाश से छूई जाती जिसकी हिमराशि निरन्तर पुण्डरीक (श्वेतकमल) पर भ्रमरमाला तथा भगवान् शंकर के कण्ठ में प्रसिद्ध उस कालिका (कलौंस या काली देवी=दुर्गा) की रचना करती रहती है ॥१४॥

13. Poets have been inspired in their poetry by it, and artists in their art. Sages have learnt secrets (mantras) from it; thinkers have obtained clarity from it and the learned have obtained their philosophy from it.

14. Its slow-line bordering on the sapphire blue sky resembles a row of bees hemming a white lotus or the dark goddess Kali in the white neck of Lord Shiva (aiternatively the dark patch of poison in the white neck of Lord Shiva).

---

१. कालिका=काष्ण्यम् । चाण्डिकाभेदश्च । 'कालिका चण्डिकाभेदे काष्ण्य'—इति मेदिनी ॥१४॥

अभ्रंलिहानां शिखरावलीनां
विसर्पि सौभाग्यमवेक्ष्य यस्य ।
विलुप्तगाम्भीर्यभरः समुद्रः
पारिप्लवं गच्छति दाक्षिणात्यः ॥१५॥

नतोन्नता शुभ्रविभा विशाला
शृङ्गावली यस्य विभाति नूनम् ।
केनापि चित्रे लिखितास्तरङ्गाः
क्षीराम्बुधेः कारुतरेण दिव्याः ॥१६॥

जिसकी आकाशचुम्बी शिखरावलियों के फैलते सौभाग्य को देखकर दाक्षिणात्य समुद्र अपनी गंभीरता को छोड़कर चंचल हो उठता है ।१५॥

जिसकी नतोन्नत, शुभ्र कान्ति से समन्वित तथा विशाल शृंगावलियों को देखकर ऐसा लगता है जैसे किसी चितेरे ने क्षीर सागर की दिव्य लहरों को चित्र में उतार दिया हो ॥१६॥

15. The southern ocean surges forth forgetting its depth after seeing the row of its sky scrapper peaks with their fluent beauty.

16. Its undulating and large white peaks give the impression as it were of the beautiful waves of the milk ocean sketched in a still painting by a skillful artist.

पोडयमाद्यस्य कवेरखर्वा
राशीभवत्याश्रितमूर्तभावा ।
आयामिनीं यस्य निभाल्य गूढां
संस्थां सचेता भ्रमतो ब्रवीति ॥१७॥

कर्पूरराशीन्निचितांश्च लाजा-
नुद्भिन्नतौषार[1]शिलीन्ध्रपुञ्जान् ।
जानन्ति यस्य प्रचितां हिमानीं
मोहाद्भ्रमान्मुग्धतया किरात्यः ॥१८॥

जिसके आयामी एवं गूढ विन्यास को देखकर सहृदय-जन भ्रमवश यह कह उठते हैं कि यह आदि कवि वाल्मीकि की उदात्त तथा मूर्त पीडा की राशि है ॥१७॥

जिसकी निचित हिमानी को मोहवश, भ्रमवश या मुग्धता-वश किरातों की स्त्रियाँ कपूर की राशि, या खीलों का ढेर या फिर फूटते तुषार-शिलीन्ध्र (बर्फीले कुकुरमुत्ते) समझ लेती हैं ॥१८॥

17. Any thinker looking at its unfathomed conclaves, is led to wonder whether it is not the pangs of the first poet (Valmiki) taking shape (in the form poetry).

18. The hill women (hunter women) mistake it because of their ignorance, confusion or naivette for a collection of campher or puffed rice or growth of mushrooms.

---

१. तुषारस्येदं तौषारम् ॥१८॥

जीवैरसंख्यैः कृतसाधुवादं
गुहामुखैश्चाप्यनुगीयमानम् ।
गीतं रसस्यन्दि मनोभिरामं
गायन्ति यस्मिन् मधुरं प्रपाताः ॥१९॥

उन्निद्रवृक्षाक्षरपङ्क्तिरम्या
द्रोण्यः[1] समुद्घाटितशास्त्रकल्पाः ।
आभान्ति यस्मिन् परितः स्फुरन्ति
सौन्दर्यसूत्राणि सरित्प्रवाहाः ॥२०॥

जिसमें झरने उन रसस्यन्दी और मनोहर मधुर गीतों को गाते रहते हैं जिनकी कि असंख्य प्राणी प्रशंसा करते हैं तथा जिनका गुफाओं के मुख अनुगान करते हैं ॥१९॥

जिसमें उनींदे वृक्षों की अक्षर-पंक्तियों से सुहावनी घाटियाँ खुले शास्त्रों सी प्रतीत होती हैं और जिसमें नदियों के प्रवाह स्फुटित होते सौन्दर्य-सूत्र से लगते हैं ॥२०॥

19. In it, the cascades sing softly, a tasteful and pleasing song to the accompaniment of cave mouths, for all the livings to hear and appreciate.

20. Its valleys look like opened out text books of shastras with the rows of standing trees being rows of written letters. The flowing streams look like the aphorisms (sutras) with their beauty shining all around.

---

१. द्रोण्यः=शैलसन्धयः। 'द्रोणी तु शैलयोः सन्धि'रित्यभिधानचिन्तामणिः। अत्रोत्तरार्धे सरित्प्रवाहाः परितः स्फुरन्ति सौन्दर्यसूत्राण्याभान्तीत्यन्वयः ॥२०॥

क्रान्तास्तुषारे किरणाः खरांशो-
र्यस्मिन् सृजन्त्यद्भुतमिन्द्रचापान् ।
कलास्तथेन्दोर्नवपुण्डरीक-
राजीमुदग्रामिव राजमानाम् ।।२१।।

वक्राः क्वचित् क्वापि पुनः प्रगाढा
नतोन्नताः क्वापि च सान्तरालाः ।
यत्प्रान्तरेखाः परिभान्ति नूनं
हृत्स्पन्दनानीव भुवोऽङ्कितानि ।।२२।।

जिसमें (दिन में) सूर्य की किरणें तुषार में संक्रान्त होकर अद्भुत इन्द्र धनुषों की सृष्टि कर देती हैं तथा (रात में) चन्द्रमा की कला मंजुल नवीन श्वेत कमलों की उदग्र पंक्तियों की सृष्टि करती हैं ।।२१।।

जिसकी कहीं टेढ़ी, कहीं प्रगाढ, कहीं ऊँची-नीची और कहीं अन्तरालों से युक्त प्रान्त-रेखाएँ पृथ्वी के हृदय के अंकित स्पन्दन-सी प्रतीत होती हैं (जैसे ई० सी० जी० में हृदय स्पन्दन अंकित हो जाते हैं) ।।२२।।

21. Reflected by its white snow, the rays of sun break into countless rainbows. Similarly, the rays of moon create as it were cf rows of shining white lotuses.

22. Curving at places, depressed at others, undulating at some places and broken at some others its line looks like the recorded heart beats of mother Earth.

शेते धरा यत्र नभोविताने
चैतन्यमाप्नोति च यत्र निष्ठाम् ।
शान्तिः पुनर्गायति यत्र मन्द्रं
छन्दांसि, केलिं वितनोति सर्गः ॥२३॥

एका नमन्तीव विवृद्धरागात्
परोन्नमन्तीव पुनः प्रमोदात् ।
दिवस्पृथिव्यौ मिलतः प्रगाढं
परस्परं यच्छिखरावलीषु ॥२४॥

जहाँ आकाश के वितान के नीचे पृथ्वी सोती है, जहाँ चैतन्य को निष्ठा प्राप्त होती है, जहाँ शान्ति मन्द्र स्वर में गीत गाती है और जहाँ सर्ग केलियाँ करता रहता है ॥२३॥

जिसकी शिखरावलियों पर एक (अर्थात् आकाश) राग से झुक जाता है तथा दूसरी (अर्थात्-पृथ्वी) प्रमोद से ऊपर उठ जाती है और इस प्रकार द्यावा-पृथिवी परस्पर प्रगाढ़ रूप से मिल जाती हैं ॥२४॥

23. Earth sleeps here under the shamiana of the sky, consience gets stablised; tranquilily sings soft musical notes and the creation of nature indulges in full play.

24. Its peaks, are the meeting point of the sky and earth, the former bending with great love and the latter looking up with great glee.

अत्युच्छ्रितं नीलनभोनिखातं
हैमं यदीयं शिखरं विरूढम् ।
जाग्रत्सितच्छायशिरोरुहाया
मुहुर्मुहुः स्मारयतीन्दिरायाः ॥२५॥

तस्मिन् विमानेन मनोजवेन
प्रोच्चैश्चिताभस्म वितीर्य मातुः ।
प्रवर्तते स्म क्रमतो विषण्णां
राजीवगान्धी निजराजधानीम् ।२६।

जिसका उठता बहुत ऊँचा बर्फीला शिखर नीले आकाश में धँस कर उन श्रीमती इन्दिरा गान्धी का उत्कण्ठा के साथ बार-बार स्मरण करा देता है जिनके बालों में एक भाग जागती सफेदी से युक्त था ॥२५॥

उस (हिमालय) पर मन के समान तीव्र गति वाले विमान पर बैठकर बहुत ऊँचाई से अपनी माता (श्रीमती इन्दिरा गान्धी) की चिता-भस्म बिखेर कर श्री राजीव गान्धी क्रमशः अपनी दुःख में डूबी राजधानी (दिल्ली) की ओर लौटने लगे ॥२६॥

25. Its white snowclad peaks jutting into the sky often reminds one of the head of Mrs. Indira Gandhi, herself with its streak of white hair, amidst a flock of black hair otherwise.

26. After scattering the ashes of his mother from a plane at speeding at a height in the sky, Shri Rajiv Gandhi returns to sorrowing Delhi (his head quarters).

अस्थीनि देशार्चनकृत्यपूता-
न्यस्याश्चिताभस्म च दीप्रनिष्ठम् ।
गङ्गोद्भवेऽङ्के च दृढे स्वकीये-
ऽग्रहीद्भवानीगुरुरिद्धभक्त्या ॥२७॥

तदद्भुतं पावनमद्वितीयं
प्रकीर्णमीड्यं भसितं हिमाद्रौ ।
न्यधायि मौलौ गिरिशेण भक्त्या
विलोक्यमानेन भृशं भवान्या ॥२८॥

पार्वती के पिता हिमालय ने देशभक्ति से पवित्र इनकी अस्थियों और उज्ज्वल निष्ठाओं वाली इनकी चिता-भस्म को गंगा के उद्भव-स्थान और अपने दृढ़ अंक में बड़ी भक्ति के साथ ग्रहण किया था ॥२७॥

हिमालय पर बिखेरी गई उस अद्भुत, पावन, अद्वितीय तथा सम्मानास्पद भस्म को भगवान् शंकर ने पार्वती जी की उपस्थिति में अनेक बार अपने मस्तक पर लगाया था ॥२८॥

27. The Himalayas, the father of goddess Bhavani, has humbly accepted the remains of Indira Gandhi hallowed by the respects shown by the entire country (or alternatively through her services to the nation) in its hardened lap from where Ganga flows.

28. Her hallowed and respectable ashes scattered in the Himalayas are devotedly caught and applied by Lord Shiva on His head in the presence of mother goddess Bhavani.

भावाञ्जलिं पश्चिममत्र साधु-
यंदाऽदिशत् प्रह्वशिरोधरोऽसौ ।
अगादि मौनेन तदाऽधरेण
व्यथाकथा मातृवियोगजन्या ।।२९।।

संख्यातिगाभिः स्मृतिभिः प्ररूढः
शोकैरवाच्यैः किल दत्तहस्तः ।
निरुद्धवेगोऽपि कपोलपाल्या-
मवातरत् तुन्दिलबाष्पबिन्दुः ।३०।

जब इस साधु (पुत्र) ने यहाँ सिर झुकाकर अन्तिम भावांजलि प्रदान की थी तब इसके मौन अधर ने मातृवियोगजन्य व्यथा-कथा व्यक्त वाणी में कह दी थी ।।२९।।

संवेग के रोके जाने पर भी असंख्य स्मृतियों से समुद्भूत, अकथनीय शोक द्वारा सँभाला गया एक मोटा आँसू उनके कपोल पर ढुलक गया ।।३०।।

29. When he ( Shri Rajiv Gandhi) bent down to pay his last respects with the bowed head, the painful story of the loss of his mother was being silently narrated by his lips .

30. Welled up by countless memories and handed down by indescribable sorrow, whose flow get checked in his checks, a large tear drop flowed down his (Shri Rajiv Gandhi's ) cheek,

मातुः प्रणम्यास्थ्यवशेषलेशान्
प्रसन्नभूतिं गिरिराजमालाम् ।
उत्सं च गाङ्गं परिवीक्ष्य मौन-
मुपाविशत् स्वासनमिन्दिराजः ॥३१॥

एकान्तलाभाद् द्रुतिपारवश्याद्
वियोगसंवित्तिभराद् विशेषात् ।
अथाविरासन् श्रुतदृष्टपूर्वा
मनःपटे केऽपि कथाप्रसङ्गाः ॥३२॥

माँ के अस्थि-अवशेषों को प्रणाम करके प्रसन्नविभूति गिरिराज-माला और गंगा के स्रोत को देखकर इन्दिरापुत्र राजीव गान्धी (वायुयान में) अपने आसन पर बैठ गए ॥३१॥

तदनन्तर एकान्त मिल जाने से, चित्त के द्रुतिपरवश हो जाने से तथा विशेष रूप से मातृ-वियोग की अनुभूति हो जाने से उनके मानस-पटल पर कुछ सुने और देखे कथा-प्रसंग उभरने लगे ॥३२॥

31. After paying respects to the remains of his mother and after seeing the clear and glorious range of Himalayan mountains at the origin of the Ganga, Shri Rajiv Gandhi sat back on his seet silently .

32. In his solitude. with the heart moved by emotion and with the pangs of separation from his mother, a string of events and anecdotes either heard or seen ( concerning his mother ) flashed on the screen of his mind ,

प्रज्ञासकाशात्[1] कृतिरुज्ज्वलेव
कृतेरुताहो विशदेव कीर्तिः ।
कीर्तेरुत प्रीतिरिव क्वणन्ती
जातेन्दिराऽऽसीत् कमलासकाशात् ॥३३॥

पुण्यावलीनां स्वपितामहस्य
गुरोः पटीयस्तपसां विभूतेः ।
मातुर्गरीयोयशसां च सैका
त्रिवेणिरासीन्ननु तीर्थराजे ॥३४॥

जैसे प्रज्ञा से उज्ज्वल कृति अथवा कृति से विशद कीर्ति या कीर्ति से खिलखिलाती प्रीति उत्पन्न होती है वैसे ही श्रीमती कमला नेहरू से इन्दिरा (प्रियदर्शिनी) उत्पन्न हुई थी ॥३३॥

तीर्थराज प्रयाग में वह अपने पितामह पण्डित मोतीलाल नेहरू की पुण्यावली, पिता पण्डित जवाहरलाल नेहरू की प्रभूत तपश्चर्याओं की विभूति तथा माता श्रीमती कमला नेहरू के गरिमामय यश की एक त्रिवेणी थी ॥३४॥

33. Like a good deed from knowledge, like to spotless renown from a good deed or like the humming pleasure from fame, Indira Gandhi was born from Kamla.

34. She was like Triveni herself (confluence of three streams) in the Tirdtha Raja, that is Prayag (Alahabad), as she was the confluence of the stream of rivulets of her paternal grandfather and the stream of the skilful concentration of her father and the stream of the significant renown of her mother.

---

१. अथ मातरं स्मरति प्रज्ञासकाशादित्यादिनाऽन्त्येष्टिकार्ये सममेवेत्यन्तम् ॥३३॥

प्रयागराजस्य हृदि प्रसन्न-
याऽऽनन्दवर्णे भवने स्फुरन्ती ।
साऽऽसीच्छिशुत्वे निजतन्त्रताया
नीराजनामङ्गलदीपिकेव ॥३५॥

करे गृहीत्वा भ्रमति स्म बापुं
तं शैशवे प्रश्नभरानपृच्छत् ।
प्रज्ञाविशेषादचिनोदहिंसा-
मन्त्रं च तं पूततमं महर्षिम् ॥३६॥

प्रयागराज के आनन्द-भवन नामक प्रसन्न हृदय में दीप्त होती वह इन्दिरा बचपन में स्वतन्त्रता की नीराजना (आरती) की मंगल-दीपिका सी प्रतीत होती थी ॥३५॥

बचपन में वह महात्मा गान्धी का हाथ पकड़ कर घूमती, उनसे ढेर सारे प्रश्न पूछती तथा अपनी बुद्धि के वैभव से उन पवित्रतम महर्षि से अहिंसा-मन्त्र का चयन करती रहती ॥३६॥

35. In the centre of Allahabad, in Anand Bhavan, she glowed in her childhood like the flame of a holy lamp lit for the illumination of the diety of independence.

36. In childhood, she moved round holding the hands of Bapuji (Mahatma Gandhi). She asked him a lot of questions and by her intelligence she imbibed the secret of non-violence from him.

---

प्रसन्ने आनन्दवर्णे—इति सन्धिच्छेदः ॥३५॥
बापुम्=महात्मानं गान्धिनम् ॥३६॥

तदीयसन्मन्त्रवचःप्रपञ्चैः
सिक्ता सुबद्धा प्रगुणीकृता सा ।
स्वतन्त्रतादैवतमन्दिरस्य
द्वारेऽलसद् वन्दनमालिकेव ॥३७॥

बाल्यात्प्रभृत्येव महोज्ज्वलाना-
मासीत् खनिः सा किल संस्कृतीनाम्[1] ।
अदीनता निर्भयताऽप्यहिंसा
क्षमाऽथ दाक्षिण्यधियोऽत्र रेजुः ॥३८॥

उनके सन्मन्त्रों के वचन-विन्यास से सिक्त, सुबद्ध तथा व्यवस्थित की गई वह स्वतन्त्रता-देवी के मन्दिर के द्वार पर वन्दनमाला-सी शोभित होने लगी ॥३६॥

बाल्य-काल से ही वह अत्यन्त उज्ज्वल संस्कारों की खान थी। उनमें अदीनता, निर्भयता, अहिंसा, क्षमा और दाक्षिण्य-बुद्धि आ विराजी थी ॥३८॥

37. She shone like the flower plant on the gate arch of the temple of goddess of independence, watered as it were by the good advice and words of Bapuji and getting nourishment thereby.

38. From her childhood itself, she was a treasure-house of all glowing cultures, loftiness, fearlessness, non-violence, forbearance and compassion.

---

१. संस्कृतीनाम्=संस्काराणाम् ॥३८॥

तस्या नवे मृण्मयपात्रसार्द्रे
लग्नाः शिशुत्वे नृपनीतिरेखाः ।
तपोभिरुग्रैरचकासुरूर्ध्व-
माजीवनं मञ्जुलचित्ररूपाः ॥३९॥

आसीद् विनीताऽथ च दुष्प्रधर्षा
प्रियंवदाऽऽद्याऽथ च वाग्मिनीनाम् ।
शुचिः स्थिराऽथो मधुरा वदान्या
शास्त्रैकचक्षुश्च दृढा दयार्द्रा ॥४०॥

उनके ताजे मृण्मय पात्र सरीखे सार्द्र बचपन में लगे राजनीति के संस्कार आगे चलकर उग्र तपस्या (ताप) से जीवनपर्यन्त मंजुल चित्रों के रूप में दीप्त होते रहे ॥३९॥

वे विनीत किन्तु दुष्प्रधर्ष थीं, प्रियंवदा, वाग्मिनियों में श्रेष्ठ, पवित्र, स्थिर, मधुर, वदान्य, शास्त्र को प्रमाण मानने वाली, दृढ़ तथा दयार्द्र थीं ॥४०॥

39. The lines of political wisdom etched on the raw earthen ware pot of her childhood got firmly fixed through concentration (heat) in later life and came to shine as beautiful paintings till her death.

40. She was humble and at the same time firm. She spoke kindly and she was a preeminent speaker. She was pure, firm, sweet, generous and kind and guided by the authority of our great texts.

न तत्समाऽऽसीद् भुवि रक्तलोका
प्रज्ञाकलामानसमन्विता वा ।
बुद्धिस्ततोत्साहसमृद्धिरुग्रा
स्फीता स्मृतिः क्व नु लोक्यतां सा ॥४१॥

जाते स्वतन्त्रे खलु भारतेऽथ
प्रधानमन्त्रित्वपदं गतस्य ।
अधत्त साचिव्यपदं स्वबुद्ध्या
नित्यं पितुः पण्डितनेहरोः सा ॥४२॥

उनके समान पृथ्वी पर कोई भी अनुरक्तप्रजावती या बुद्धि, कला और स्वाभिमान से युक्त नहीं थी। वितत बुद्धि, उग्र उत्साह-समृद्धि तथा स्फीत स्मृति अब कहाँ दिखाई देगी ॥४१॥

भारत के स्वतन्त्र हो जाने पर उन्होंने सदा अपनी बुद्धि द्वारा प्रधानमन्त्री के पद पर आसीन अपने पिता पण्डित नेहरू के सचिव-पद को धारण किया ॥४२॥

41. There was no one like her who loved the world and who was loved by the world in turn, or in intelligence, art and self-respect. Where can one see such intellect and great enthusiasm and strong and sharp memory like in her.

42. After India became independent, she with her inteliligence always assisted her father, Pt. Nehru who became the Prime Minister.

दानैः परामर्शपरम्पराणां
क्रियाविधेर्वापि निरीक्षणेन ।
सौविध्यसम्पादनतत्परा सा-
भवत् पितुः काऽप्यवलम्बयष्टिः ॥४३॥

पूर्वं श्रुताऽस्याः कलकीर्तिरेभिः
पश्चादमीभिश्च विलोकिताऽसौ ।
इति स्वकर्णान् स्तुवति स्म पूर्व-
मक्षीणि पश्चान्निखिलोऽपि लोकः ॥४४॥

कभी आवश्यक परामर्श देकर तथा कभी उनकी क्रिया-विधि देखकर सुविधा-सम्पादन करतीं वे पिता की अवलम्ब-यष्टि बन गई थीं ॥४३॥

'इन्होंने (अर्थात् कानों ने) इनकी मधुर कीर्ति पहले सुनी है और इन्होंने (अर्थात् आँखों ने) बाद में उन्हें देखा है'– यह कहकर सम्पूर्ण संसार अपने कानों की पहले और आँखों की बाद में प्रशंसा करता ॥४४॥

43. In giving advice or in supervising work, she was like a prop for her father, as she was always keen to secure the most appropriate and proper things.

44. The people praised their ears first and then their eyes because the ears heard about her first and then only the eyes beheld her.

---

१. एभिः=कर्णैः । अमीभिः=लोचनैः ॥४४॥

भङ्गीविशेषैः प्रथितैर्गुणौघैः
ख्यातिं गतां भूवलये समग्रे ।
स्वाध्यक्षसिंहासनसंस्थितां तां
कांग्रेस-संस्थाऽरमताऽथ दृष्ट्वा ।।४५।।

मातामहो मे परिवीक्ष्य पुत्री-
मुच्चैः पदं प्राप्नुवतीं प्रसन्नः ।
आनन्दसिक्तैर्नयनैश्चकार
सुस्वागतं स्नेहभरैश्च शब्दैः ।।४६।।

विशिष्ट भंगिमाओं तथा सुप्रसिद्ध गुणों से समग्र भूमण्डल पर प्रसिद्ध उनको अपने सिंहासन पर आसीन देख कर कांग्रेस नामक संस्था अत्यन्त प्रसन्न हुई ।।४५।।

मेरे नाना (पण्डित नेहरू) ने अपनी पुत्री को उच्च पद पर प्रतिष्ठित देखकर तथा प्रसन्न होकर आनन्दसिक्त नेत्रों से तथा स्नेह पगे शब्दों से उनका स्वागत किया था ।।४६।।

45. The Congress organisation was happy to see her installed as President, as she had already acquired a reputation in the whole world through her qualities and culture.

46. My maternal grandfather (Pt. Nehru) welcomed her his eyes, wet with tears of joy and with words full of affection after she (his daughter) occupied the high position as he was happy because of this.

"अस्तीन्दिरा[1] मे तनया गुणाढ्या
ह्यस्यां च मे प्रीतिभरः प्रसिद्धः।
नुतिः क्रियेताथ च पक्षपातो
नोचेद् गुणानां तनुतामुपेक्षा ॥४७॥

चारित्र्यसम्पत्तिमथापि निष्ठां
सहिष्णुतां कार्यविधानशक्तिम् ।
श्लाघ्यां तथाऽस्याः प्रकृतिं विलोक्य
मनो मनाङ् मे विदधाति गर्वम् ॥४८॥

"गुणों की खान इन्दिरा मेरी पुत्री है, इसके प्रति मेरी प्रीति सर्वत्र प्रसिद्ध है। अब यदि मैं इसकी प्रशंसा करूँ तो पक्षपात लगता है, यदि नहीं तो गुणों की उपेक्षा होती है ॥४७॥

इसकी चारित्र्य-सम्पत्ति, निष्ठा, सहिष्णुता, क्रिया सम्पादन का सामर्थ्य तथा श्लाघनीय प्रकृति को देखकर मेरा मन कुछ गर्वीला हो उठा है ॥४८॥

47. He said "My daughter has qualities and so my affection for her is well-known. By praising her, I am not showing any favouritism as otherwise I will be accused of disregarding qualities."

48. "I feel proud looking at her character, concentration, forbearance, ability and praiseworthy nature".

---

१. अथ त्रिभिः श्लोकैः पण्डितजवाहरलालनेहरू-प्रोक्तं निबध्नाति ॥४७॥

नैतद् विजानामि च मत्सकाशात्
संस्कारलेशोऽप्यनयाऽत्र लब्धः ।
मेधाविनी नूनमियं गुणानां
मालां सकाशादवृणोत् स्वमातुः ।।"४६।।

अध्यास्त सा सक्रियराजनीति-
मञ्चं ततः सिंहमिवाद्यशक्तिः ।
कर्माण्यसाध्यानि तथाद्भुतानि
तया कृतान्यद्य जना गृणन्ति[1] ।।५०।।

मैं यह नहीं जान पा रहा हूँ कि मुझ से इसने कुछ संस्कार प्राप्त किया है । किन्तु यह निश्चय है कि इस मेधाविनी ने अपनी माता के पास से गुणों की परम्परा ग्रहण की है ।।"४६।।

तदनन्तर वे सक्रिय राजनीति के मंच पर ऐसे आरूढ़ हो गई जैसे आद्य शक्ति सिंह पर आरूढ़ हुई थी। उनके द्वारा किए गए असाध्य और अद्भुत कार्यों की आज भी लोग स्तुति करते हैं ।।५०।।

49. "I do not recall her taking any training from me. Intelligent as she is, she definitely inherited her qualities from her mother".

50. She then occupied the active stage of politics like Mother goddess occupied the lion. Even now people speak of the important and wonderful things done by her.

---

१. गृणन्ति=स्तुवन्ति । गृ शब्दे—इति धातोः ।।५०।।

